ती"ति रेतःसिग्योगः श्रूयते । रेतः सिञ्चतीति रेतः सिक्तेनानुशयिनो योगो रेतःसिग्योगस्तत्र तद्भक्षिताऽन्ननिबन्धनो रेतोनिबन्धनश्च तद्भूयो-भवतीति तद्भावलक्षणश्च योगस्तत्संसर्गमात्रं प्रतिपादयति, तद्वद्व्रीह्यादिभाववचनमपि संसर्ग-मात्रविषयम्, तद्भूय एव भवति मनुष्यपश्वादि-भूतस्य रेतःसेक्तुः सम्बन्धी सन्सदृशो-भवतीत्यर्थः ॥ २६ ॥

### वेदान्तकौस्तुभप्रभा ।

रेतः सिग्योगो ऽथ ।

इतश्च व्रीह्यादिसंश्लेषमात्रं व्रीह्यादिभाववचनानन्तरं "यो यो-ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवती"ति श्रुतेः रेतः सिग्यो-गो यथा तद्योगमात्रं वक्ति, तद्वद्व्रीह्यादिभावो ऽपि तद्योगमात्रमेव भूय एव भवति, तदाकृतिर्भवतीत्यर्थः । मनुष्येण भक्षितो मनुष्यो-जायते, पश्वादिना भक्षितः पश्वादिर्भवतीति यावत् ॥ २६ ॥

## सू० योनेः शरीरम् ॥३।१।२७॥

### वेदान्तपारिजातसौरभः ।

योनिमाश्रित्य शरीरी भवति ॥ २७ ॥

हरिरों तत्सदिति श्रीमद्भगवन्निम्बार्कविरचिते शारीरकमीमांसावाक्यार्थे वेदान्तपारिजात-सौरभे तृतीयाध्यायस्य प्रथमः पादः ॥१॥

---

वेदान्तकौस्तुभः ।

योनेः शरीरम् ।

अनुशयी पञ्चमाहुतौ सिग्विंयुक्तो योनेः संयोगात् शरीरं प्रतिपद्यते, तस्मात्ततः पूर्वत्राकाशादिभाववचनानि तत्तत्संयोगमात्रं प्रतिपादयन्तीति सिद्धम् ॥ २७ ॥

इत्यन्याधिष्ठिताधिकरणम् ॥ ६ ॥

हरिरों तत्सदिति श्रीसनत्कुमारसन्ततिप्रवर्त्तकाचार्यश्रीमन्निम्बार्कपादपद्मान्तेवासिना श्रीश्रीनिवासाचार्येण विरचिते शारीरकमीमांसाभाष्ये श्रीमति वेदान्तकौस्तुभे तृतीयाध्यायस्य प्रथमः पादः ॥ १ ॥

---

वेदान्तकौस्तुभप्रभा ।

योनेः शरीरम् ।

योनिप्राप्तेः पश्चादेवानुशयिनां देहप्राप्तिः । तत्रैव सुखदुःखादिभोगस्य सत्त्वात् । ततः पूर्वं ह्याकाशादिप्राप्तौ तद्योगमात्रमेवेति सिद्धम् ॥ २७ ॥ इत्यन्याधिष्ठिताधिकरणम् ॥ ६ ॥

इति श्रीसनकसम्प्रदायप्रवर्त्तकाचार्य श्रीश्रीनिम्बार्कमतानुयायिश्रीमन्मुकुन्दचरणारुणपद्ममकरन्दभृङ्गेण जगद्विजयि श्री६श्रीकेशवकाश्मीरिभट्टेन सङ्गृहीतायां श्रीवेदान्तकौस्तुभप्रभाख्यायां ब्रह्मसूत्रवृत्तौ तृतीयाध्यायप्रथमपादविवरणम् ॥ १ ॥

---



श्रीमते निम्बार्काय नमः ।

अथ

तृतीयाऽध्याये द्वितीयपादारम्भः ।

## सू० सन्ध्ये सृष्टिराह हि ॥

३ । २ । १ ॥

वेदान्तपारिजातसौरभः ।

एवं जाग्रतो जीवस्य वैराग्यार्थं संसारगतिरुदारिता । अथ स्वप्नादि निरूप्यते । स्वप्नमधिकृत्य "अथ न तत्र रथा रथयोगा न पन्थानो भवन्ति, अथ रथान् रथयोगान् पथः सृजते" इत्यादि श्रूयते । तत्र रथादिसृष्टिर्जीवकृता ? उत ब्रह्मकृता ? इति सन्देहे सन्ध्ये स्वप्नस्थाने रथादिसृष्टिर्जीवकृता । हि यतः "सृजते स कर्त्ते"ति श्रुतिराह ॥ १ ॥

वेदान्तकौस्तुभः ।

एवं प्रथमे पादे आत्मानात्मविवेकार्थं भूतभौतिकसम्बन्धो वैराग्यार्थं च स्वर्गनरकसम्बन्धो जाग्रतो जीवस्य प्रपञ्चितः । इदानीं

॥*॥श्रीः॥*॥

सर्वसाधारणों से विज्ञप्ति।

# श्री ६ श्री निम्बार्कसम्प्रदाय-

## के मुद्रित ग्रन्थ॥

(१) परपक्ष गिरिव्रज (वेदान्तः)

(२) श्री निम्बार्क व्रतनिर्णय (वं)

(३) श्री वैष्णव धर्म मीमांसा।

(४) वेदान्त कामधेनु - श्री श्री भगवत् निम्बार्क विरचित दशश्लोकी भाषा टीका सहित

(५) वेदान्त सिद्धान्त जान्हवी सिद्धान्तसेतुनामक टीका-सहित प्रथमे तरङ्ग तक (काशी)

(६) श्री निम्बार्क स्तोत्र-पञ्चधाटी - द्वैताद्वैत विवरण-सहित।

(७) केनोपनिपद् सटीक छपता है।

(८) वार्षिक व्रतोत्सव निर्णय - जिसमें श्री ६ निम्बार्के-मतानुसारी १९६३ की सालभरके व्रतादिकोंका निर्णयहै। यह हरसाल छपा करेगा। उपरोक्त ग्रन्थ छपकर तैयारहैं लिप्सु निम्न लिखित स्थान पर पत्रद्वारा व्यवहार करें।

पं० किशोरदास

वंशीवट- श्री वृन्दावन

जि० मथुरा।